सादेवंकृतांजलिरभाषत ॥१४॥ अर्ज्जु
नउवाच ॥ पश्यामिदेवांस्तवदेवदेहेस
र्वांस्तथाभूतविशेषसंघान् ॥ ब्रह्माण
मीशंकमलासनस्थमृषींश्चसर्वानु
रगांश्चदिव्यान ॥१५॥ अनेकबाहूदर
वक्त्रनेत्रंपश्यामित्वांसर्वतोनंतरूप

नांतंनमध्यंनपुनस्तवादिंपश्यामिवि
श्वेश्वरविश्वरूप ॥१६॥ किरीटिनंगदिनं
चक्रिणंचतेजोराशिंसर्वतोदीप्तिमं
तं ॥ पश्यामित्वांदुर्निरीक्ष्यंसमंताद्दी
प्तानलार्कद्युतिमप्रमेयं ॥१७॥ त्वमक्ष
रंपरमंवेदितव्यंत्वमस्यविश्वस्यपरं

निधाने॥ त्वमव्ययः शाश्वतधर्मगोप्ता॥
सनातनस्त्वं पुरुषो मतो मे॥१८॥ अ
नादिमध्यांतमनंतवीर्यमनंतबाहुं
शशिसूर्यनेत्रं॥ पश्यामित्वांदीप्तहु
ताशवक्त्रं स्वतेजसा विश्वमिदं तपंतं
द्यावापृथिव्योरिदमंतरं हि व्याप्तमेक

१९

यैकेन दिशश्च सर्वाः॥ दृष्ट्वाद्भुतं रूपमु
ग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन्
अमी हि त्वां सुरसंघा विशंति केचिद्भी
ताः प्रांजलयो गृणंति॥ स्वस्तीत्युक्त्वा
महर्षिसिद्धसंघाः स्तुवंति त्वां स्तुतिभिः
पुष्कलाभिः॥ २१॥ रुद्रादित्या वसवो ये

वसाध्याविश्वेश्विनौमरुतश्चोष्मपाश्च
गंधर्वयक्षाःसुरसिद्धसंघाःवीक्षंते
त्वांविस्मिताश्चैवसर्वे ॥२२॥ रूपंमहत्ते
बहुवक्त्रनेत्रंमहाबाहोबहुबाहूरुपा
दं ॥ बहूदरंबहुदंष्ट्राकरालंदृष्ट्वालो
काःप्रव्यथितास्तथाहं ॥२३॥ नभः

स्पृशंदीप्तमनेकवर्णंव्यात्ताननंदीप्तवि
शालनेत्रं॥ दृष्ट्वाहित्वांप्रव्यथितांतरा
त्माधृतिंनविंदामिशमंचविष्णो॥२४॥
दंष्ट्राकरालानिचतेमुखानिदृष्ट्वैव
कालानलसंनिभानि॥ दिशोनजाने
नलभेचशर्मप्रसीददेवेशजगन्निवा

म॥२५॥अमीचत्वांधृतराष्ट्रस्यपुत्राःस
र्वेसहैवावनिपालसंघैः॥भीष्मोद्रो
णःसूतपुत्रस्तथासौसहास्मदीयैर
पियोधमुख्यैः॥२६॥वक्त्राणितेत्वर
माणाविशंतिदंष्ट्राकरालानिभया
नकानि॥केचिद्विलग्नादशनांतरेषु

गी.
२६

संदृश्यंतेचूर्णितैरुत्तमांगैः॥२७॥यथा
नदीनांबहवोंबुवेगाःसमुद्रमेवाभिमु
खाद्रवंति॥तथातवामीनरलोकवी
राविशंतिवक्त्राण्यभिविज्वलंतिः॥२८
यथाप्रदीप्तंज्वलनंपतंगाविशंतिना
शायसमृद्धवेगाः॥तथैवनाशाय।

८

विशंतिलोकास्तवापिवक्त्राणिसमृ
द्धवेगाः॥२९॥लेलिह्यसेग्रसमानःस
मंताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः॥
तेजोभिरापूर्यजगत्समग्रंभासस्तवो
ग्राःप्रतपंतिविष्णो॥३०॥आख्याहिमे
कोभवानुग्ररूपोनमोस्तुतेदेववरप्र

गी.
९७

सीद ॥ विज्ञातुमिच्छामि भवंतमाद्यंन
हि प्रजानामि तव प्रवृत्तिं ॥ ३१ ॥ श्रीभग॰
वानुवाच ॥ कालोस्मि लोकक्षयकृत्प्र
वृद्धो लोकान्समाहर्तुमिह प्रवृत्तः
ऋतेपि त्वां न भविष्यंति सर्वे येवस्थि
ताः प्रत्यनीकेषु योधाः ॥ ३२ ॥ तस्मात्त्व

मुत्तिष्ठ यशो लभस्व जित्वा शत्रुं भुंक्ष्व
राज्यं समृद्धं ॥ मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥
द्रोणं च भीष्मं च जयद्रथं च कर्णं तथा
न्यानपि योधवीरान् ॥ मया हतांस्त्वं ज
हि मा व्यथिष्ठा युध्यस्व जेतासि रणे स

गी॰
९८

पत्नान्॥ ३४ ॥ संजय उवाच ॥ एतच्छ्रुत्वा
वचनंकेशवस्यकृतांजलिर्वेपमानः
किरीटी॥ नमस्कृत्वाभूयएवाहकृष्णं
सगद्गदंभीतभीतःप्रणम्य॥ ३५ ॥ अर्जु
नउवाच॥ स्थानेहृषीकेशतवप्रकी
र्त्याजगत्प्रहृष्यत्यनुरज्यतेच॥ रक्षांसि

भीतानिदिशोद्रवंतिसर्वेनमस्यंतिच
सिद्धसंघाः ॥३६॥ कस्माच्चतेननमेर
न्महात्मन्गरीयसेब्रह्मणोप्यादिक
र्त्रे ॥ अनंतदेवेशजगन्निवासत्वमक्षरं
सदसत्तत्परंयत् ॥३७॥ त्वमादिदेवःपु
रुषःपुराणस्त्वमस्यविश्वस्यपरंनिधानं



100

गी.
९९

धानं ॥ वेत्तासि वेद्यं च परं च धाम त्वया तत
तं विश्वमनंतरूप ॥ ३८ ॥ वायुर्यमोग्निर्व
रुणः शशांकः प्रजापतिस्त्वं प्रपिता
महश्च ॥ नमो नमस्तेस्तु सहस्रकृत्वः
पुनश्च भूयोपि नमो नमस्ते ॥ ३९ ॥ नमः
पुरस्तादथ पृष्ठतस्ते नमोस्तु ते सर्वत

एव सर्व ॥ अनंतवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोसि सर्वः ॥ ४० ॥ स
खेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे या
दव हे सखेति ॥ अजानता महिमानं त
वेदं मया प्रमादात्प्रणयेन वापि ॥ ४१ ॥
यच्चावहासार्थमसत्कृतोसि विहार

गी.
१

शय्यासनभोजनेषु॥ एकोथवाप्यच्यु
ततत्समक्षंतत्क्षामयेत्वामहमप्रमेय
पितासिलोकस्यचराचरस्यत्वमस्यपू
ज्यश्चगुरुर्गरीयान्॥ नत्वत्समोस्त्यभ्य
धिकःकुतोन्योलोकत्रयेप्यप्रतिमप्र-
भाव॥४३॥ तस्मात्प्रणम्यप्रणिधाय

कायंप्रसादयेत्वामहमीशमीड्यं॥पि
तेवपुत्रस्यसखेवसख्युःप्रियःप्रियाया
र्हसिदेवसोढुं॥४४॥अदृष्टपूर्वंहृषि
तोस्मिदृष्ट्वाभयेनचप्रव्यथितंमनोमे
तदेवमेदर्शयदेवरूपंप्रसीददेवेशज
गन्निवास॥४५॥किरीटिनंगदिनंचक्र

इछामित्वांद्रष्टुमहंतथैव।तेनैव
रूपेणचतुर्भुजेनसहस्रबाहोभवविश्व
मूर्ते॥४६॥श्रीभगवानुवाच मयाप्रसन्नेन
तवार्जुनेदंरूपंपरंदर्शितमात्मयोगात्
तेजोमयंविश्वमनंतमाद्यंयन्मेत्वदन्येन
नदृष्टपूर्वं॥नवेदयज्ञाध्ययनैर्नदानैर्न·

वक्रियाभिर्नतपोभिरुग्रैः॥ एवंरूपःश
क्यअहंनृलोकेद्रष्टुंत्वदन्येनकुरुप्रवी
र॥४८॥मातेव्यथामाचविमूढभावो
दृष्ट्वारूपंघोरमीदृङ्ममेदं॥व्यपेतभीः
प्रीतमनाःपुनस्त्वंतदेवमेरूपमिदंप्र
पश्य संजयउवाच इत्यर्जुनंवासुदेवस्तथो

कास्वकंरूपंदर्शयामासभूयः॥ आश्वासयामासचभीतमेनंभूत्वापुनःसौम्यवपुर्महात्मा॥५०॥ अर्जुनउवाच दृष्ट्वेदंमानुषंरूपंतवसौम्यंजनार्दन॥ इदानीमस्मिसंवृत्तःसचेताःप्रकृतिंगतः॥५१॥ श्रीभगवानुवाच॥ सुदुर्दर्शमिदंरूपंदृष्ट्व

वानसि यन्मम ॥ देवा अप्यस्य रूपस्य नि
त्यं दर्शनकांक्षिणः ॥५२॥ नाहं वेदैर्न त
पसा न दानेन न चेज्यया ॥ शक्य एवंवि
धो द्रष्टुं दृष्टवानसि मां यथा ॥५३॥ भक्त्या
त्वनन्यया शक्य अहमेवंविधोर्ज्जुन ॥ ज्ञा
तुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप ॥५४॥

मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जि-
तः ॥ निर्वैरः सर्वभूतेषु यः समामेति पांडव

५५

इतिश्रीभगवद्गीतासूपनिषत्सुब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्व-
रूपदर्शनंनामैकादशोध्यायः ॥११॥ अर्जुन
उवाच ॥ एवंसततयुक्ता ये भक्तास्त्वांप

र्युपासते॥ येचाप्यक्षरमव्यक्तंतेषांको
योगवित्तमाः॥१॥श्रीभगवानुवाच॥ म
य्यावेश्यमनोयेमांनित्ययुक्ताउपास
ते॥ श्रद्धयापरयोपेतास्तेमेयुक्ततमा
मताः॥२॥ येत्वक्षरमनिर्देश्यमव्यक्तं
पर्युपासते॥ सर्वत्रगमचिंत्यंचकूट॰

गी.
८४

स्थमचलंध्रुवं ॥ ३ ॥ संनियम्येंद्रियग्रामं
सर्वत्रसमबुद्धयः ॥ तेप्राप्नुवंतिमामेवस
र्वभूतहितेरताः ॥ ४ ॥ क्लेशोधिकतरस्ते
षामव्यक्तासक्तचेतसां ॥ अव्यक्ताहिग
तिर्दुःखंदेहवद्भिरवाप्यते ॥ ५ ॥ येतुसर्वा
णिकर्माणिमयिसंन्यस्यमत्पराः ॥ अन

न्येनैवयोगेनमांध्यायंतउपासते॥६॥
तेषामहंसमुद्धर्तामृत्युसंसारसागरा
त्॥भवामिनचिरात्पार्थमय्यावेशि
तचेतसां॥७॥मय्येवमनआधत्स्वमयि
बुद्धिंनिवेशय॥निवसिष्यसिमय्येव
अतऊर्ध्वंनसंशयः॥८॥अथचित्तंसमा

गी.
१०५

धातुंनशक्नोषिमयिस्थिरं॥अभ्यास
योगेनततोमामिच्छाप्तुंधनंजय॥अभ्या
सेप्यसमर्थोसिमत्कर्मपरमोभव॥मद
र्थमपिकर्माणिकुर्वन्सिद्धिमवाप्स्य
सि॥१०॥अथैतदप्यशक्तोसिकर्तुंमद्यो
गमाश्रितः॥सर्वकर्मफलत्यागंततः।

कुरु यतात्मवान् ॥११॥ श्रेयो हि ज्ञानम
भ्यासाज्ज्ञानाद्ध्यानं विशिष्यति ॥ ध्याना
त्कर्मफलत्यागस्त्यागाच्छांतिरनंतरं
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च
निर्ममो निरहंकारः समदुःखसुखः
क्षमी ॥१३॥ संतुष्टः सततं योगी यता ।

गी. ९६

मादृढनिश्चयः॥ मय्यर्पितमनोबुद्धि
र्यो मद्भक्तः स मे प्रियः॥१४॥ यस्मान्नो
द्विजते लोको लोकान्नोद्विजते च यः॥
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रि
यः॥१५॥ अनपेक्षः शुचिर्दक्ष उदासीनो
गतव्यथः॥ सर्वारम्भपरित्यागी यो मद्भ

क्तः स मे प्रियः ॥१६॥ यो न हृष्यति न द्वे
ष्टि न शोचति न कांक्षति ॥ शुभाशुभप
रित्यागी भक्तिमान्यः स मे प्रियः ॥१७॥
समः शत्रौ च मित्रे च तथा मानापमा
नयोः ॥ शीतोष्णसुखदुःखेषु समः सं
गविवर्जितः ॥१८॥ तुल्यनिंदास्तुति

गी.
१२

मौनी संतुष्टो येन केन चित् ॥ अनिके
तः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥
ये तु धर्म्यामृतमिदं यथोक्तं पर्युपास
ते ॥ श्रद्दधाना मत्परमा भक्तास्तेतीव मे
प्रियाः ॥ २० ॥ इति श्रीभगवद्गीतासूपनि
षत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृ

९९

स्यार्जुनसंवादेभक्तियोगोनामद्वाद

शोध्यायः ॥१२॥ अर्जुनउवाच ॥ प्रकृतिं

पुरुषंचैवक्षेत्रंक्षेत्रज्ञमेवच ॥ एतद्वेदि

तुमिच्छामिज्ञानंज्ञेयंचकेशव ॥ १ श्री

भगवानुवाच ॥ इदंशरीरंकौंतेयक्षेत्र

मित्यभिधीयते ॥ एतद्योवेत्तितंप्राहुः

विविधैः पृथक्॥ ब्रह्मसूत्रपदैश्चैवहेतु
मद्भिर्विनिश्चितैः॥५॥ महाभूतान्यहं
कारोबुद्धिरव्यक्तमेवच॥ इंद्रियाणिद
शैकंचपंचचेंद्रियगोचराः॥६॥ इच्छाद्वे
षःसुखंदुःखंसंघातश्चेतनाधृतिः॥
एतत्क्षेत्रंसमासेनसविकारमुदाहृ

गी॰
११५

ते ॥ ७ ॥ अमानित्वमदंभित्वमहिंसा क्षां
तिरार्जवं ॥ आचार्योपासनं शौचं स्थै-
र्यमात्मविनिग्रहः ॥ ८ ॥ इंद्रियार्थेषु
वैराग्यमनहंकार एव च ॥ जन्ममृत्युज
राव्याधिदुःखदोषानुदर्शनं ॥ ९ ॥ असक्
तिरनभिष्वंगः पुत्रदारगृहादिषु ॥

नित्यं च समचित्तत्वमिष्टानिष्टोपपत्ति
षु ॥१०॥ मयि चानन्ययोगेन भक्तिरव्य
भिचारिणी ॥ विविक्तदेशसेवित्वमर
तिर्जनसंसदि ॥११॥ अध्यात्मज्ञाननि
त्यत्वं तत्त्वज्ञानार्थदर्शनं ॥ एतज्ज्ञानमि
ति प्रोक्तमज्ञानं यदतोन्यथा ॥१२॥ ज्ञे

गी॰
११

ये यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते
अनादिमत्परंब्रह्मनसत्तन्नासदुच्यते ।
सर्वतःपाणिपादंतत्सर्वतोक्षिशिरोमु
खं ॥ सर्वतःश्रुतिमल्लोकेसर्वमावृत्य
तिष्ठति ॥ १४ ॥ सर्वेन्द्रियगुणाभाससर्वे
न्द्रियविवर्जितं ॥ असक्तंसर्वभृच्चैवनि॰

९२

र्गुणंगुणभोक्तृच॥१५॥बहिरंतश्चभू
तानामचरंचरमेवच॥सूक्ष्मत्वात्तद
विज्ञेयंदूरस्थंचांतिकेचतत्॥१६॥अ
विभक्तंचभूतेषुविभक्तमिवचस्थितं
भूतभर्तृचतज्ज्ञेयंग्रसिष्णुप्रभविष्णुच
ज्योतिषामपितज्ज्योतिस्तमसःपरमु

गी.
११२
म

च्यते॥ज्ञानंज्ञेयंज्ञानगम्यंहृदिसर्वस्य
विष्ठितं॥१७॥इतिक्षेत्रंतथाज्ञानंज्ञेयं
चोक्तंसमासतः॥मद्भक्तएतद्विज्ञायम
द्भावायोपपद्यते॥१८॥प्रकृतिंपुरुषं
चैवविद्ध्यनादीउभावपि॥विकारां
श्चगुणांश्चैवविद्धिप्रकृतिसंभवान्

२.

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरु
च्यते॥ पुरुषः सुखदुःखानां भोक्तृत्वे
हेतुरुच्यते॥२०॥ पुरुषः प्रकृतिस्थो हि
भुंक्ते प्रकृतिजान्गुणान्॥ कारणं गु
णसंगोस्य सदसद्योनिजन्मसु॥२१॥
उपद्रष्टानुमंता च भर्ता भोक्ता महेश्व

रः ॥ परमात्मेति चाप्युक्तो देहेस्मिन्पुरुषः परः ॥ २३ ॥ य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ॥ सर्वथा वर्तमानोपि न स भूयोभिजायते ॥ २४ ॥ ध्यानेनात्मनि पश्यंति केचिदात्मानमात्मना ॥ अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २५ ॥

न्येत्वेवमजानंतःश्रुत्वान्येभ्यउपास-
ते॥तेपिचांतितरंत्येवमृत्युंश्रुतिपरा
यणाः॥२६॥यावत्संजायतेकिंचित्स
त्वंस्थावरजंगमं॥क्षेत्रक्षेत्रज्ञसंयोगा
त्तद्विद्धिभरतर्षभ॥२७॥समंसर्वेषुभू
तेषुतिष्ठंतंपरमेश्वरं॥विनश्यत्स्ववि

नश्यंतेयःपश्यतिसपश्यति॥२७॥सम
पश्यन्हिसर्वत्रसमवस्थितमीश्वरं॥न
हिनस्त्यात्मनात्मानंततोयातिपरांग
तिं॥२८॥प्रकृत्यैवचकर्माणिक्रियमा
णानिसर्वशः॥यःपश्यतितथात्मानम
कर्तारंसपश्यति॥२९॥यदाभूतपृथ।

न

भावमेकस्थमनुपश्यति॥ततएवच
विस्तारंब्रह्मसंपद्यतेतदा॥३०॥अनादि
त्वान्निर्गुणत्वात्परमात्मायमव्ययः॥
शरीरस्थोपिकौंतेयनकरोतिनलि
प्यते॥३१॥यथासर्वगतंसौक्ष्म्यादाका
शंनोपलिप्यते॥सर्वत्रावस्थितोदेहे

तथात्मा नोपलिप्यते ॥ ३३ ॥ यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३४ ॥ क्षेत्रक्षेत्रज्ञयोरेवमंतरं ज्ञानचक्षुषा ॥ भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परं ॥ ३५ ॥ इति श्रीभगवद्गीतासु

पनिषत्सुब्रह्मविद्यायांयोगशास्त्रेश्री ।
कृष्णार्जुनसंवादेक्षेत्रक्षेत्रज्ञनिर्देश
योगोनामत्रयोदशोध्यायः ॥१३॥ श्रीभ
गवानुवाच ॥ परंभूयःप्रवक्ष्यामिज्ञा
नानांज्ञानमुत्तमं ॥ यज्ज्ञात्वामुनयः
सर्वेपरांसिद्धिमितोगताः ॥१॥ इदं ।

ज्ञानमुपाश्रित्यममसाधर्म्यमागताः
सर्गेपिनोपजायंतेप्रलयेनव्यथंति
च ॥२॥ ममयोनिर्महद्ब्रह्मतस्मिन्गर्भं
दधाम्यहं ॥ संभवः सर्वभूतानांततोभ
वतिभारत ॥३॥ सर्वयोनिषुकौंतेय
मूर्तयः संभवंतियाः ॥ तासांब्रह्ममहद्

योनिरहंबीजप्रदःपिता ॥४॥ सत्वंर-
जस्तमइतिगुणाःप्रकृतिसंभवाः ॥
निबध्नंतिमहाबाहोदेहेदेहिनमव्य-
यं ॥५॥ तत्रसत्वंनिर्मलत्वात्प्रकाश-
कमनामयं ॥ सुखसंगेनबध्नातिज्ञा-
नसंगेनचानघ ॥६॥ रजोरागात्मकं

गी.
११६

विद्धि तृष्णासंगसमुद्भवं ॥ तन्निबध्ना
ति कौंतेय कर्मसंगेन देहिनं ॥ ७ ॥ त
मस्त्वज्ञानजं विद्धि मोहनं सर्वदेहि
नां ॥ प्रमादालस्यनिद्राभिस्तन्निबध्ना
ति भारत ॥ ८ ॥ सत्त्वं सुखे संजयति र
जः कर्माणि भारत ॥ ज्ञानमावृत्य तु

तमः प्रमादेसंजयत्युत ॥९॥ रजस्तमश्चा
भिभूय सत्वं भवति भारत ॥ रजः स
त्वं तमश्चैव तमः सत्वं रजस्तथा ॥१०॥
सर्वद्वारेषु देहेस्मिन्प्रकाश उपजाय
ते ॥ ज्ञानं यदा तदा विद्याद्विवृद्धं सत्वमि
त्युत ॥ लोभः प्रवृत्तिरारंभः कर्मणाम

ग

गी.

११७ ग

शंस्पृहाः ॥ रजस्येतानिजायंतेविवृद्धे
भरतर्षभ ॥१२॥ अप्रकाशोप्रवृत्तिश्चप्र
मादोमोहएवच ॥ तमस्येतानिजायं
तेविवृद्धेकुरुनंदन ॥१३॥ यदासत्वेप्र
वृद्धेतुप्रलयंयातिदेहभृत् ॥ तदोत्तम
विदांलोकानमलान्प्रतिपद्यते ॥१४॥

जसिप्रलयंगत्वाकर्मसंगिषुजायते ॥
तथाप्रलीनस्तमसिमूढयोनिषुजा ॥
यते ॥ १५ ॥ कर्मणःसुकृतस्याहुःसा
त्विकंनिर्मलंफलं ॥ रजसस्तुफलंदुः
खमज्ञानंतमसःफलं ॥ १६ ॥ सत्वात्सं
जायतेज्ञानंरजसोलोभएवच ॥ प्रमा

दमोहौतमसोभवतोज्ञानमेवच॥१७॥
ऊर्ध्वंगच्छंतिसत्वस्थामध्येतिष्ठंतिरा॰
जसाः॥जघन्यगुणवृत्तिस्थाअधोगा॰
च्छंतितामसाः॥१८॥नान्यंगुणेभ्यःकर्ता
रंयदाद्रष्टानुपश्यति॥गुणेभ्यश्चपरं॰
वेत्तिमद्भावंसोधिगच्छति॥१९॥गुणाने

नावतीत्यत्रीन्देहीदेहसमुद्भवान् ॥ जन्म
मृत्युजराउःखैर्विमुक्तोमृतमश्नुते ॥
अर्जुनउवाच ॥ कैर्लिंगैस्त्रीन्गुणानेता
नतीतो भवति प्रभो ॥ किमाचारः कथं
चैतांस्त्रीन्गुणानतिवर्त्तते ॥ २१ ॥ श्रीभग
वानुवाच ॥ प्रकाशं च प्रवृत्तिं च मोहमेव

२०

चपांडव॥ नद्वेष्टिसंप्रवृत्तानिननिवृ
त्तानिकांक्षति॥२२॥उदासीनवदा
सीनोगुणैर्योनविचाल्यते॥गुणा
वर्तंतइत्येवयोवतिष्ठतिनेंगते॥२३॥
समदुःखसुखःस्वस्थःसमलोष्टा
श्मकांचनः॥तुल्यप्रियाप्रियोधीर

ल्यनिंदात्मसंस्तुतिः ॥ २४ ॥ मानापमा
नयोस्तुल्यस्तुल्योमित्रारिपक्षयोः ॥
सर्वारंभपरित्यागीगुणातीतःसउ
च्यते ॥ २५ ॥ मांचयोव्यभिचारेणभक्ति
योगेनसेवते ॥ सगुणान्समतीत्यैता
न्ब्रह्मभूयायकल्पते ॥ २६ ॥ ब्रह्मणोहि

गी॰
१२

प्रतिष्ठाहममृतस्याव्ययस्यच ॥ शा
श्वतस्यचधर्मस्यसुखस्यैकांतिकस्य
च ॥ २७ ॥ इतिश्रीभगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जु
नसंवादेगुणत्रयविभागयोगोनामच
तुर्दशोध्यायः ॥ १४ ॥ श्रीभगवानुवाच

ऊर्ध्वमूलमधःशाखमश्वत्थंप्राहुर
व्ययं॥छंदांसियस्यपर्णानियस्तंवे
दसवेदवित॥१॥अधश्चोर्ध्वंप्रसृता
स्तस्यशाखागुणप्रवृद्धाविषयप्रवा
लाः॥अधश्चमूलान्यनुसंततानिक
र्म्मानुबंधीनिमनुष्यलोके॥२॥नरूपम

गी.
१२२

स्येह तथोपलभ्यते नांतो न चादिर्नैव
संप्रतिष्ठा ॥ अश्वत्थमेनं सुविरूढमूल
मसंगशस्त्रेण दृढेन छित्वा ॥ ३ ॥ ततः
पदं तत्परिमार्गितव्यं यस्मिन्गता
न निवर्तंति भूयः ॥ तमेव चाद्यं पुरुषं
प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी

निर्मानमोहाजितसंगदोषाअध्या
त्मनित्याविनिवृत्तकामाः॥ द्वंद्वैर्विमु
क्ताःसुखदुःखसंज्ञैर्गच्छंत्यमूढाःपद
मव्ययंतत्॥५॥नतद्भासयतेसूर्योन
शशांकोनपावकः॥ यद्गत्वानिव
र्त्तंतेतद्धामपरमंमम॥६॥ममैवांशो

गी.
१२२

जीवलोकेजीवभूतःसनातनः॥म
नःषष्ठानींद्रियाणिप्रकृतिस्थानि
कर्षति॥७॥शरीरंयदवाप्नोतियच्चा
प्युत्क्रामतीश्वरः॥गृहीत्वैतानिसंया
तिवायुर्गंधानिवाशयात्॥८॥श्रोत्रं
चक्षुःस्पर्शनंचरसनंघ्राणमेवच॥अ

यिष्ठाय मनश्चायं विषयानुपसेवते ।
उत्क्रामंतं स्थितं वापि भुंजानं वा गुणा
न्वितं ॥ विमूढा नानुपश्यंति पश्यंति ।
ज्ञानचक्षुषः ॥१०॥ यतंतो योगिनश्चै
नं पश्यंत्यात्मन्यवस्थितं ॥ यतंतोप्य
कृतात्मानो नैनं पश्यंत्यचेतसः ॥११॥

यदादित्यगतंतेजोजगद्भासयतेखिलं
यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमाम
कं॥१२॥गामाविश्यचभूतानिधारया
म्यहमोजसा॥पुष्णामिचौषधीःसर्वाः
सोमोभूत्वारसात्मकः॥१३॥अहंवैश्वा
नरोभूत्वाप्राणिनांदेहमाश्रितः॥प्रा

णापानसमायुक्तः पचाम्यन्नं चतुर्वि
धं ॥ १४ ॥ सर्वस्य चाहं हृदि संनिविष्टो म
त्तः स्मृतिर्ज्ञानमपोहनं च ॥ वेदैश्च सर्वै
रहमेव वेद्यो वेदांतकृद्वेदविदेव चाहं
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव
च ॥ क्षरः सर्वाणि भूतानि कूटस्थोक्षर उ

च्यते ॥१६॥ उत्तमः पुरुषस्त्वन्यः परमात्मे
त्युदाहृतः ॥ यो लोकत्रयमाविश्य बि
भर्त्यव्यय ईश्वरः ॥१७॥ यस्मात्क्षरमती
तोहमक्षरादपि चोत्तमः ॥ अतोस्मि
लोके वेदे च प्रथितः पुरुषोत्तमः ॥१८
यो मामेवमसंमूढो जानाति पुरुषो

त्तमं॥ ससर्वविद्भजतिमांसर्वभावेनभा
रत॥१९॥ इतिगुह्यतमंशास्त्रमिदमु
क्तंमयानघ॥ एतद्बुद्ध्वाबुद्धिमान्स्यात्
कृतकृत्यश्चभारत॥२०॥ इतिश्रीभग
वद्गीतासूपनिषत्सुब्रह्मविद्यायांयो
गशास्त्रेश्रीकृष्णार्जुनसंवादेपुरुषो

गी. १२५

त्तमयोगोनामपंचदशोध्यायः ॥१५॥ श्रीभ
गवानुवाच ॥ अभयंसत्वसंशुद्धिर्ज्ञान
योगव्यवस्थितिः ॥ दानंदमश्चयज्ञश्च
स्वाध्यायस्तपआर्जवं ॥१॥ अहिंसास
त्यमक्रोधस्त्यागःशांतिरपैशुनं ॥ दया
भूतेष्वलोलत्वंमार्दवंह्रीरचापलं ॥२॥

तेजः क्षमा धृतिः शौचमद्रोहो नाति ।
मानिता ॥ भवंति संपदं दैवीमभिजा ।
तस्य भारत ॥ ३ ॥ दंभो दर्पोभिमानश्च ।
क्रोधः पारुष्यमेव च ॥ अज्ञानं चाभिजा
तस्य पार्थ संपदमासुरी ॥ ४ ॥ दैवी संप
द्विमोक्षाय निबंधायासुरी मता ॥ मा

शुचः संपदं दैवीमभिजातोसि पांडव
द्वौ भूतसर्गौ लोकेस्मिन्दैव आसुर ए
व च ॥ दैवो विस्तरशः प्रोक्तः आसुरं पा
र्थ मे शृणु ॥ ६ ॥ प्रवृत्तिं च निवृत्तिं च ज
ना न विदुरासुराः ॥ शौचं नापि चाचा
रो न सत्यं तेषु विद्यते ॥ ७ ॥ असत्यमप्र

तिष्ठंतेजगदाहुरनीश्वरं॥अपरस्परसं
भूतंकिमन्यत्कामहैतुकं॥एतांदृष्टिम
वष्टभ्यनष्टात्मानोल्पबुद्धयः॥प्रभवं
त्युग्रकर्माणःक्षयायजगतोहिताः॥९
कामममाश्रित्यदुष्पूरंदंभमानमदा-
न्विताः॥मोहाद्गृहीत्वासद्ग्राहान्प्र-

गी.
१२३

र्तंते शुचिव्रता: ॥१०॥ चिंतामपरिमे-
यां च प्रलयांतामुपाश्रिता: । कामोप-
भोगपरमा एतावदिति निश्चिता: ॥१
आशापाशशतैर्बद्धा: कामक्रोधप-
रायणा: ॥ ईहंते कामभोगार्थमन्या-
येनार्थसंचयान ॥१२॥ इदमद्य मया-

१

लब्धमिमंप्राप्स्येमनोरथं ॥ इदमस्ती
दमपिमेभविष्यतिपुनर्धनं ॥ १३ ॥ असौ
मयाहतःशत्रुर्हनिष्येचापरानपि ॥ ई
श्वरोहमहंभोगीसिद्धोहंबलवान्सु
खी ॥ १४ ॥ आढ्योभिजनवानस्मिको
न्योस्तिसदृशोमया ॥ यक्ष्येदास्यामि

मोदिष्य इत्यज्ञानविमोहिताः ॥१५॥ अ
नेकचित्तविभ्रांता मोहजालसमा
वृताः ॥ प्रसक्ताः कामभोगेषु पतंति
नरकेऽशुचौ ॥१६॥ आत्मसंभाविताः स्त
ब्धा धनमानमदान्विताः ॥ यजंते ना
मयज्ञैस्ते दंभेनाविधिपूर्वकं ॥७॥ श्र·

हंकारंबलंदर्पंकामंक्रोधंचसंश्रिताः

ममात्मपरदेहेषुप्रद्विषंतोभ्यसूय

का ॥१८॥ तानहंद्विषतःक्रूरान्संसारे

षुनराधमान् ॥ क्षिपाम्यजस्रमशु

भानासुरीष्वेवयोनिषु ॥१९॥ आसुरीं

योनिमापन्नामूढाजन्मनिजन्मनि ॥

मामप्राप्यैव कौंतेय ततो यांत्यधमां
गतिं ॥२०॥ त्रिविधं नरकस्येदं द्वारं ना-
शनमात्मनः ॥ कामक्रोधस्तथा लो-
भस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥ एतैर्वि-
मुक्तः कौंतेय तमोद्वारैस्त्रिभिर्नरः ॥
आचरत्यात्मनः श्रेयस्ततो याति प०

रांगतिं ॥२२॥ यः शास्त्रविधिमुत्सृज्य
वर्तते कामकारतः ॥ नससिद्धिमवा
प्नोति नसुखं नपरांगतिं ॥२३॥ तस्मा
च्छास्त्रं प्रमाणंते कार्याकार्यव्यवस्थि
तौ ॥ ज्ञात्वा शास्त्रविधानोक्तं कर्मक-
र्तुमिहार्हसि ॥२४॥ इतिश्रीभगवद्गी

गी.
१६.

तासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रे
श्रीकृस्नार्जुनसंवादेदैवासुरसंपति
योगोनामषोडशोध्यायः ||१६|| अर्जुन
वाच || येशास्त्रविधिमुत्सृज्ययजंते
श्रद्धयान्विताः || तेषांनिष्ठातुकाकृ
स्नसत्वमाहोरजस्तमः ||१|| श्रीभग

वानुवाच ॥ त्रिविधा भवति श्रद्धा देहि-
नां सा स्वभावजा ॥ सात्विकी राजसी
चैव तामसी चेति तां शृणु ॥ २ ॥ सत्वा-
नुरूपा सर्वस्य श्रद्धा भवति भारत ॥ श्र-
द्धामयोयं पुरुषो यो यच्छ्रद्धः स एव
सः ॥ ३ ॥ यजंते सात्विका देवान्यक्षर-

सांसि राजसाः ॥ प्रेतान्भूतगणांश्चा
न्ये यजंते तामसा जनाः ॥४॥ अशास्त्र
विहितं घोरं तप्यंते ये तपो जनाः ॥ दं॰
भाहंकारसंयुक्ताः कामरागबला॰
न्विताः ॥५॥ कर्षयंतः शरीरस्थं भूत
ग्राममचेतसः ॥ मां चैवांतःशरीर॰

स्थेतान्विद्यासुरनिश्चयान॥६॥आ
हारस्त्वपिसर्वेस्यत्रिविधोभवतिप्रि
यः॥यज्ञस्तपस्तथादानंतेषांभेदमि
मंस्रणु॥७॥आयुःसत्वबलारोग्यसु
खप्रीतिविवर्धनाः॥रस्याःस्निग्धाः
स्थिराहृद्याआहाराःसात्विकप्रियाः

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदा
हिनः॥ आहाराराजसस्येष्टादुःखशो
कामयप्रदाः॥९॥ यातयामंगतरसं
पूतिपर्युषितंचयत्॥ उच्छिष्टमपि
चामेध्यंभोजनंतामसप्रियं॥१०॥ अ
फलाकांक्षिभिर्यज्ञोविधिदृष्टोयइ

ज्यते ॥ यष्टव्यमेवेतिमनः समाधायस
सात्विकः ॥ ११ ॥ अभिसंध्यायतुफल
दंभार्थमपिचैवयत ॥ इज्यतेभरता
श्रेष्ठतेयज्ञंविद्धिराजसं ॥ १२ ॥ विधि
हीनमसृष्टान्नंमंत्रहीनमदक्षिणं ॥ श्र
द्धाविरहितंयज्ञंतामसंपरिचक्षते

१३

देवद्विजगुरुप्राज्ञपूजनंशौचमार्ज
वं॥ब्रह्मचर्यमहिंसाचशारीरंतपउ
च्यते॥१४॥अनुद्वेगकरंवाक्यंसत्यं
प्रियहितंचयत्॥स्वाध्यायाभ्यसनं
चैववाङ्मयंतपउच्यते॥१५॥मनःप्र
सादःसौम्यत्वंमौनमात्मविनिग्रहः

भावसंशुद्धिरित्येतत्तपोमानसमु
च्यते॥१६॥श्रद्धयापरयातप्तंतपस्त
त्रिविधंनरैः॥अफलाकांक्षिभिर्यु
क्तैःसात्विकंपरिचक्षते॥१७॥सत्का
रमानपूजार्थंतपोदंभेनचैवयत्॥
क्रियतेतदिहप्रोक्तंराजसंचलमध्रु

गी॰
१३४

वं॥१८॥मूढग्राहेणात्मनोयत्पीडयाक्रि
यतेतपः॥परस्योत्सादनार्थंवातत्तामस
मुदाहृतं॥१९॥दातव्यमितियद्दानंदी
यतेऽनुपकारिणे॥देशेकालेचपात्रेच
तद्दानंसात्विकंस्मृतं॥२०॥यत्तुप्रत्युप
कारार्थंफलमुद्दिश्यवापुनः॥दीयते

वपरिक्लिष्टं तद्राजसमुदाहृतं ॥२१॥ अ
देशकाले यद्दानमपात्रेभ्यश्च दीयते ॥
असत्कृतमवज्ञातं तत्तामसमुदाहृतं ॥
ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः
स्मृतः ॥ ब्राह्मणास्तेन वेदाश्च यज्ञाश्च वि
हिताः पुरा ॥ २३ ॥ तस्मादोमित्युदाहृ

२२

गी·
१२५

त्ययज्ञदानतपःक्रियाः॥ प्रवर्त्तंतेवि
धानोक्ताः सततंब्रह्मवादिनां॥२४॥त
दित्यनभिसंधायफलंयज्ञतपःक्रि
याः॥दानक्रियाश्चविविधाःक्रियंते
मोक्षकांक्षिभिः॥२५॥सद्भावेसाधुभा
वेचसदित्येतत्प्रयुज्यते॥प्रशस्तेक

मेणितथासच्छब्दःपार्थयुज्यते॥२६॥
यज्ञेतपसिदानेचस्थितिःसदितिचो
च्यते॥कर्मचैवतदर्थीयंसदित्येवाभि
धीयते॥२७॥अश्रद्धयाहुतंदत्तंतपस्त
प्तंकृतंचयत्॥असदित्युच्यतेपार्थ
नचतत्प्रेत्यनोइह॥२८॥इतिश्रीभग

वद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशा
स्त्रेश्रीकृष्णार्जुनसंवादेत्रिगुणविभा
गयोगोनामसप्तदशोध्यायः॥१७॥ अ
र्जुनउवाच॥ संन्यासस्यमहाबाहोतत्त्व
मिच्छामिवेदितुं॥ त्यागस्यचहृषी
केशपृथक्केशिनिषूदन॥१॥ श्रीभग

वानुवाच॥काम्यानांकर्मणांन्यासंसंन्या
संकवयोविदुः॥सर्वकर्मफलत्यागं
प्राहुस्त्यागंविचक्षणाः॥त्याज्यंदो
षवदित्येकेकर्मप्राहुर्मनीषिणः॥
यज्ञदानतपःकर्मनत्याज्यमितिचाप
रे॥३॥निश्चयंशृणुमेतत्रत्यागेभरतस

गी॰
१३३

तम॥ त्यागोहिपुरुषव्याघ्रत्रिविधःस
प्रकीर्तितः॥४॥ यज्ञदानतपःकर्मन
त्याज्यंकार्यमेवतत्॥ यज्ञोदानंतपश्चै
वपावनानिमनीषिणाम्॥५॥ एतान्य
पितुकर्माणिसंगंत्यक्त्वाफलानिच
कर्तव्यानीतिमेपार्थनिश्चितंमतमु॰

त्मं ॥ ६ ॥ नियतस्यतुसंन्यासः कर्मणो
नोपपद्यते ॥ मोहात्तस्यपरित्यागः ता
मसः परिकीर्तितः ॥ ७ ॥ दुःखमित्येवय
त्कर्मकायक्लेशभयात्यजेत् ॥ सकृ
त्वाराजसंत्यागंनैवत्यागफलंलभे
त् ॥ ८ ॥ कार्यमित्येवयत्कर्मनियतंक्रि

गी॰
१३८

यतेर्जुन॥ संगंत्यक्त्वाफलंचैवसत्यागः
सात्विकोमतः॥९॥नद्वेष्ट्यकुशलंकर्म
कुशलेनानुषज्जते॥त्यागीसत्वसमा॰
विष्टोमेधावीछिन्नसंशयः॥१०॥नः
हिदेहभृताशक्यंत्यक्तुंकर्माण्यशेषत
यस्तुकर्मफलत्यागीसत्यागीत्यभि

धीयते ॥११॥ अनिष्टमिष्टंमिश्रंचत्रिवि
धंकर्मणःफलं॥भवत्यत्यागिनांप्रे
त्यनतुसंन्यासिनांक्वचित॥१२॥पंचै
तानिमहाबाहोकारणानिनिबोध
मे॥सांख्येकृतांतेप्रोक्तानिसिद्धयेस
र्वकर्मणां॥१३॥अधिष्ठानंतथाकर्ता

करणंचपृथग्विधं॥ विविधाश्चपृथक्
चेष्टादैवंचैवात्रपंचमं॥१४॥ शरीरवा
ङ्मनोभिर्यत्कर्मप्रारभतेनरः॥ न्याय्यं
वाविपरीतंवापंचैतेतस्यहेतवः॥
तत्रैवंसतिकर्तारमात्मानंकेवलंतु
यः॥ पश्यत्यकृतबुद्धित्वान्नसपश्य-

तिदुर्मतिः ॥ १६ ॥ यस्य नाहंकृतो भावो
बुद्धिर्यस्य न लिप्यते ॥ हत्वापि स इमां
ल्लोकान्न हंति न निबध्यते ॥ १७ ॥ ज्ञानं
ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः
ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदत

: १८
:

प्रोच्यते गुणसंख्याने यथावच्छृणु ता
न्यपि ॥१९॥ सर्वभूतेषु येनैकं भाव-
मव्ययमीक्षते ॥ अविभक्तं विभक्तेषु-
तज्ज्ञानं विद्धि सात्त्विकं ॥२०॥ पृथक्त्वेन
तु यज्ज्ञानं नानाभावान्पृथग्विधान् ॥
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसं

यत्तुकृत्स्नवदेकस्मिन्कार्येसक्तम
हैतुकं॥ अतत्वार्थवदल्पंचतत्तामस
मुदाहृतं॥२२॥ नियतंसंगरहितमरा
गद्वेषतःकृतं॥ अफलप्रेप्सुनाकर्म
यत्तत्सात्विकमुच्यते॥२३॥ यत्तुका
मेप्सुनाकर्मसाहंकारेणवापुनः॥

गी.
१४२

क्रियतेबहुलायासंतद्राजसमुदाहृ
तं॥२४॥अनुबंधंक्षयंहिंसामनपेक्ष्य·
चपौरुषं॥मोहादारभ्यतेकर्मयत्त·
त्तामसमुच्यते॥२५॥मुक्तसंगोनहं·
वादीधृत्युत्साहसमन्वितः॥सिद्ध्यसि
द्ध्योर्निर्विकारःकर्तासात्विकउच्यते

२६

रागीकर्मफलप्रेप्सुर्लुब्धोहिंसात्म
कोऽशुचिः॥ हर्षशोकान्वितःकर्त्ता रा
जसःपरिकीर्तितः॥२७॥अयुक्तःप्रा
कृतःस्तब्धःशठोनैष्कृतिकोऽलसः॥
विषादीदीर्घसूत्रीचकर्त्तातामसउ
च्यते॥बुद्धेर्भेदंधृतेश्चैवगुणतस्त्रिवि

गी.
१४२

धंशृणु ॥ प्रोच्यमानमशेषेणपृथ
क्त्वेनधनंजय ॥ २९ ॥ प्रवृत्तिंचनिवृत्तिं
चकार्याकार्येभयाभये ॥ बंधंमोक्षं
चयावेत्तिबुद्धिःसापार्थसात्विकी ॥
ययाधर्ममधर्मंचकार्यंचाकार्यमे
वच ॥ अयथावत्प्रजानातिबुद्धिःसा

३.

पार्थराजसी ॥३१॥ अधर्मंधर्ममिति
यामन्यतेतमसावृता ॥ सर्वार्थान्वि
परीतांश्चबुद्धिःसापार्थतामसी ॥३
धृत्याययाधारयतेमनःप्राणेंद्रिय
क्रियाः ॥ योगेनाव्यभिचारिण्याधृ
तिःसापार्थसात्विकी ॥३३॥ ययातु

२

गी॰
१४२

धर्मकामार्थान्धृत्याधारयतेर्जुन
प्रसंगेनफलाकांक्षीधृतिसापार्थ
राजसी ॥ ३४ ॥ ययास्वप्नंभयंशोकं
विषादमदमेवच ॥ नविमुंचतिदुर्मे
धाधृतिसापार्थतामसी ॥ ३५ ॥ सुखंत्व
विदानींत्रिविधंशृणुमेभरतर्षभ

भ्यासाद्रमतेयत्रदुःखांतंचनिग
च्छति ॥३६॥ यत्तदग्रेविषमिवपरि
णामेमृतोपमं ॥ तत्सुखंसात्विकं
प्रोक्तमात्मबुद्धिप्रसादजं ॥३७॥ वि
षयेंद्रियसंयोगाद्यत्तदग्रेमृतोपं
मं ॥ परिणामेविषमिवतत्सुखंरा

गी.
१४४

८

सं स्मृतं ॥ ३८ ॥ यदग्रे चानुबंधे च सु
खं मोहनमात्मनः ॥ निद्रालस्यप्र
मादोत्थं तत्तामसमुदाहृतं ॥ ३९ ॥ न
तदस्ति पृथिव्यां वा दिवि देवेषु वा पुन
सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रि
भिर्गुणैः ॥ ४० ॥ ब्राह्मणक्षत्रियविशां

शूद्राणांचपरंतप॥कर्माणिप्रवि-
भक्तानिस्वभावप्रभवैर्गुणैः॥४१॥
शमोदमस्तपःशौचंक्षांतिरार्जव-
मेवच॥ज्ञानंविज्ञानमास्तिक्यंब्र-
ह्मकर्मस्वभावजं॥४२॥शौर्यंतेजो
धृतिर्दाक्ष्यंयुद्धेचाप्यपलायनं॥दा

गी॰
१४५

नमीश्वरभावश्चक्षात्रंकर्मस्वभावजं
परिचर्यात्मकंकर्मशूद्रस्यापिस्वभा
वजं॥कृषिगोरक्षवाणिज्यंवैश्यक
र्मस्वभावजं॥४४॥स्वेस्वेकर्मण्यभि
रतःसंसिद्धिंलभतेनरः॥स्वकर्मनि
रतःसिद्धिंयथाविंदतितच्छृणु

४३
४५

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं तत
म्॥ स्वकर्मणा तमभ्यर्च्य सिद्धिं विंद
ति मानवाः॥४६॥ श्रेयान्स्वधर्मो विगु
णः परधर्मात्स्वनुष्ठितात्॥ स्वभावः
नियतं कर्म कुर्वन्नाप्नोति किल्बिष
म्॥ सहजं कर्म कौंतेय सदोषमपि न त्य

सेन ॥ सर्वारंभा हि दोषेण धूमेनाग्नि-
रिवावृता ॥४८॥ असक्तबुद्धिः सर्वत्र
जितात्मा विगतस्पृहः ॥ नैष्कर्म्यसि-
द्धिं परमां संन्यासेनाधिगच्छति ॥४९
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति नि-
बोध मे ॥ समासेनैव कौन्तेय निष्ठा ज्ञा-

नस्यायापरा ॥५०॥ बुध्याविसुद्धयायुक्तो
धृत्यात्मानंनियम्यच ॥ शब्दादीन्वि
षयांस्त्यक्त्वारागद्वेषौव्युदस्यच ॥५१॥
विविक्तसेवीलघ्वाशीयतवाक्काय
मानसः ॥ ध्यानयोगपरोनित्यंवैरा
ग्यंसमुपाश्रिताः ॥५२॥ अहंकारंब

लंदर्पंकामक्रोधंपरिग्रहं॥ विमुच्य
निर्ममःशांतोब्रह्मभूयायकल्पते॥
ब्रह्मभूतःप्रसन्नात्मानशोचतिनकां
क्षति॥समःसर्वेषुभूतेषुमद्भक्तिं
लभतेपरां॥५४॥भक्त्यामामभिजा
नातियावान्यश्चास्मितत्वतः॥ततो

मांतत्त्वतोज्ञात्वाविशतेतदनंतरं ॥ ५५
सर्वकर्माण्यपिसदाकुर्वाणोमद्व्य-
पाश्रयः ॥ मत्प्रसादादवाप्नोतिशाश्व-
तंपदमव्ययं ॥ ५६ ॥ चेतसासर्वकर्मा-
णिमयिसंन्यस्यमत्परः ॥ बुद्धियोग-
मुपाश्रित्यमच्चित्तःसततंभव ॥ ५७

गी.
१५८

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरि
ष्यसि ॥ अथ चेत्त्वमहंकारान्न श्रोष्यसि
विनंक्ष्यसि ॥५८॥ यदहंकारमाश्रित्य
न योत्स्य इति मन्यसे ॥ मिथ्यैष व्यव
सायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥५९॥
स्वभावजेन कौंतेय निबद्धः स्वेन क

र्मणा ॥ कर्तुंनेछसियन्मोहात्करि
ष्यस्यवशोपितत् ॥ ६० ॥ ईश्वरःसर्वभू
तानांहृद्देशेर्जुनतिष्ठति ॥ भ्रामयन्
सर्वभूतानियंत्रारूढानिमायया ॥
तमेवशरणंगच्छसर्वभावे
नभारत ॥ तत्प्रसादात्परांशांतिंस्था

गी.
१५४

नंप्राप्स्यसिशाश्वतं ॥ ६२ ॥ इतितेज्ञा
नमाख्यातंगुह्याद्गुह्यतरंमया ॥ वि
मृश्यैतदशेषेणयथेच्छसितथाकु
सर्वगुह्यतमंभूयः शृणुमेपरमंव
चः ॥ इष्टोसिमेदृढमितिततोव
क्ष्यामितेहितं ॥ ६४ ॥ मन्मनाभवमद्भ

क्तो मद्याजी मां नमस्कुरु ॥ मामेवैष्य
सि सत्यं ते प्रतिजाने प्रियोसि मे ॥ ६५
सर्वधर्मान्परित्यज्य मामेकं शरणं
व्रज ॥ अहं त्वा सर्वपापेभ्यो मोक्षयि
ष्यामि मा शुचः ॥ ६६ ॥ इदं ते नातपस्का
य नाभक्ताय कदाचन ॥ न चाशुश्रूष

गी॰
१५॰

वेबाच्यंनचमांयोभ्यसूयति ॥६७॥ य
इमंपरमंगुह्यंमद्भक्तेष्वभिधास्यति
भक्तिंमयिपरांकृत्वामामेवैष्यत्य
संशयः ॥६८॥ नचतस्मान्मनुष्येषुक
श्चिन्मेप्रियकृत्तमः ॥ भवितानचमे
तस्मादन्यःप्रियतरोभुवि ॥६९॥ अध्ये

ध्यतेचयइमंधर्म्यंसंवादमावयोः ॥
ज्ञानयज्ञेनतेनाहमिष्टःस्यामितिमे
मतिः॥७०॥श्रद्धावाननसूयश्चशृणु
यादपियोनरः॥सोपिमुक्तःशुभांल्लो
कान्प्राप्नुयात्पुण्यकर्मणां॥७१॥क
च्चिदेतच्छ्रुतंपार्थत्वयैकाग्रेणचेत

गी॰
१५१

सा ॥ कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनं-
जय ॥७२॥ अर्जुन उवाच ॥ नष्टो मोहः स्मृति-
र्लब्धा त्वत्प्रसादान्मयाच्युत ॥ स्थितोस्मि
गतसंदेहः करिष्ये वचनं तव ॥७३॥ संज-
य उवाच ॥ इत्यहं वासुदेवस्य पार्थस्य च
महात्मनः ॥ संवादमिममश्रौषमद्भु

तंरोमहर्षणं॥व्यासप्रसादाच्छ्रुतवानेत
द्गुह्यमहंपरं॥योगंयोगेश्वरात्कृष्णात्साक्षा
त्कथयतःस्वयं॥राजन्संस्मृत्यसंस्मृत्यसं
वादमिममद्भुतं॥केशवार्जुनयोःपुण्यं
हृष्यामिचमुहुर्मुहुः॥तच्चसंस्मृत्यसंस्मृ
त्यरूपमत्यद्भुतंहरेः॥विस्मयोमेमहान्राज

गी.
१५२

च हृष्यामि च पुनः पुनः ॥ ७७ ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥ तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥ इति श्रीमहाभारते शतसहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नामा

ॐ श्रीगणेशाय नमः ॥ ॐ य

स्य स्मरणमात्रेण जन्म

संसारबंधनात् ॥ विमुच्यते न

स॰
९

मत्तस्मै विस्नवे प्रभविस्नवे ॥ ४ ॥ नमः सम-
स्तभूतानामादिभूताय भूभृते ॥ अनेकरूपरूपा-
य विस्नवे प्रभविस्नवे ॥ ५ ॥ वैशंपायन उ-
वाच ॥ श्रुत्वा धर्मानशेषेण पावनानि
च सर्वशः ॥ युधिष्ठिरः शांतनवं पुनरेवाभ्यभा-
षत ॥ ६ ॥ युधिष्ठिर उवाच ॥ किमेकं दैवतं

लोकेकिंवाप्येकंपरायणं॥ स्तुवंतःकं

कमर्चंतःप्राप्नुयुर्मानवाःशुभं॥४॥ कोध

र्मःसर्वधर्माणांभवतःपरमोमतः॥ किं

जपन्मुच्यतेजंतुर्जन्मसंसारबंधनात्॥

भीष्मउवाच॥ जगत्प्रभुंदेवदेवमनंतंपु

रुषोत्तमं॥ स्तुवन्नामसहस्रेणपुरुषःस

५

स. २

ततोन्यितः॥६॥तमेववार्चयन्नित्यंभक्त्या
पुरुषमव्ययं॥ध्यायन्स्तुवन्नमस्यंश्चय-
जमानस्तमेववच॥७॥अनादिनिधनंविष्णुं
सर्वलोकमहेश्वरं॥लोकाध्यक्षंस्तुवन्नि
त्यंसर्वदुःखातिगोभवेत्॥८॥ब्रह्मण्यंस-
र्वधर्मज्ञंलोकानांकीर्तिवर्धनं॥लोक-

नाथंमहद्भूतंसर्वभूतभवोद्भवं ॥ ९ ॥ एषमे
सर्वधर्माणांधर्मोधिकतमोमतः ॥ य
द्भक्त्यापुंडरीकाक्षंस्तवैरर्चेन्नरःसदा ॥ १०
परमंयोमहत्तेजःपरमंयोमहत्तपः ॥
परमंयोमहद्ब्रह्मपरमंयःपरायणं ॥
पवित्राणांपवित्रंयोमंगलानांचमंग

स.
३

ले॥ दैवतंदेवतानांचभूतानांयोव्ययःपि
ता॥११॥यतःसर्वाणिभूतानिभवंत्यादि
युगागमे॥यस्मिंश्चप्रलयंयांतिपुनरेव
युगक्षये॥१२॥तस्यलोकप्रधानस्यजग
न्नाथस्यभूपते॥विष्णोर्नामसहस्रंमेशृ
णुपापभयापहं॥१३॥यानिनामानि॰

गोप्यानि विख्यातानि महात्मनः ॥ ऋषि
भिः परिगीतानि तानि वक्ष्यामि भूतये ॥
ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महामु
निः ॥ छंदोनुष्टुप्तथा देवो भगवान्देव
कीसुतः ॥ १६ ॥ गेविष्णुजिष्णुमहाविष्णु
प्रभविष्णुमहेश्वरः ॥ अनेकरूपदैत्यांत

स.
ध

नमामिपुरुषोत्तमं॥२७॥श्रीवेदव्यासउवाच
ॐअस्यश्रीविष्णोर्दिव्यसहस्रनामस्तोत्र
मालामंत्रस्य॥श्रीभगवान्वेदव्यासऋ
षिः॥अनुष्टुप्छंदः॥श्रीकृष्णःपरमा
त्मादेवता॥आत्मयोनिःस्वयंजातइति
बीजं॥देवकीनंदनःस्रष्टेतिशक्तिः॥३

द्भवः क्षोभणो देव इति परमो मंत्रः ॥ शं
खभृन्नंदकी चक्रीति कीलकं ॥ त्रिसामास:
सामगः सामेति कवचं ॥ शार्ङ्गधन्वा ग
दाधर इत्यस्त्रं ॥ विश्वं विष्णुर्वषट्कार इ
ति ध्यानं ॥ श्रीकृष्णप्रीत्यर्थे दिव्यसहस्र
नामजपे विनियोगः ॥ ॐ शिरसि वट

म: ५

व्यासऋषयेनमः मुखे ॥ अनुष्टुप्छंदसे
नमः हृदि ॥ श्रीकृष्णः परमात्मा देवता
यै नमः गुह्ये ॥ अमृतांशूद्भवो भानुरिति
बीजाय नमः पादयोः ॥ देवकीनंदनः ॥
स्रष्टेति शक्तये नमः सर्वांगे ॥ शंखभृन्नं
दकी चक्रीति कीलकाय नमः करसं

नमः २

पूर्वे ॥ मम श्रीकृष्णप्रीत्यर्थे जपे विनि-
योगः ॥ इति ऋष्यादिन्यासः ॥ ॐ विश्व
विसुर्वषट्कार इत्यंगुष्ठाभ्यां नमः ॥ अ
मृतांशूद्भवो भानुरिति तर्जनीभ्यां नमः
ब्रह्मण्यो ब्रह्मकृद्ब्रह्मेति मध्यमाभ्यां
नमः ॥ सुवर्णबिंदुरक्षोभ्य इत्यनामि-

स. ६

काभ्यांनमः ॥ आदित्योज्योतिरादित्यइ
तिकनिष्ठिकाभ्यांनमः ॥ शार्ङ्गधन्वागा
दाधरइतिकरतलकरपृष्ठाभ्यांनमः
इतिकरन्यासः ॥ अथषडंगन्यासः ॥ ॐ।
विश्वंविष्णुर्वषट्कार ॥ इतिहृदयायनम
अमृतांशूद्भवोभानुरितिशिरसेस्वाहा।

ब्रह्मण्यो ब्रह्मकृद्ब्रह्मेति शिखायै वषट् ॥
सुवर्णबिंदुरक्षोभ्य इति कवचाय हुं ॥
चंद्रांशुर्भास्करद्युतिरिति नेत्रत्रयाय
वौषट् ॥ शार्ङ्गधन्वा गदाधर इत्यस्त्राय
फट् ॥ श्रीविष्णोर्दिव्यसहस्रनामस्तो
त्रजपमहं करिष्येति संकल्पः ॥ श्री ७

स॰
७

कृष्णानमागायनेसर्वपापक्षयार्थेपाठे
विनियोगः॥ अथध्यानम्॥ शांताका
रंभुजगशयनंपद्मनाभंसुरेशं॥ वि
श्वाधारंगगनसदृशंमेघवर्णंशुभांगं
लक्ष्मीकांतंकमलनयनंयोगिभिर्ध्या
नगम्यं॥ वंदेविष्णुंभवभयहरंसर्वलो

तै

केकनाय ॥ १८ ॥ गे विश्वंविष्णुर्वषट्का
रोभूतभव्यभवत्प्रभुः ॥ भूतकृद्भूतभृद्भा
वोभूतात्माभूतभावनः ॥ १९ ॥ पूतात्मा
परमात्माचमुक्तानांपरमागतिः ॥ अ
व्ययःपुरुषःसाक्षीक्षेत्रज्ञोक्षरएवच ॥
योगोयोगविदांनेताप्रधानपुरुषेश्व

स॰
८

रः॥ नारसिंहवपुः श्रीमान्केशवः पुरुषो-
त्तमः॥२१॥ सर्वः शर्वः शिवः स्थाणु-
र्भूतादिर्निधिरव्ययः॥ संभवो भावनो
भर्ता प्रभवः प्रभुरीश्वरः॥२२॥ स्वयंभूः
शंभुरादित्यः पुष्कराक्षो महास्वनः॥ अ-
नादिनिधनो धाता विधाता धातुरुत्तमः

मः ॥ २३ ॥ अप्रमेयो हृषीकेशः पद्मना
भोऽमरःप्रभुः ॥ विश्वकर्मा मनुस्त्वष्टः
स्थविष्ठः स्थविरो ध्रुवः ॥ २४ ॥ अग्राह्यः
शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ॥
प्रभूतस्त्रिककुब्धाम पवित्रं मंगलं परं ॥
ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्र

नापतिः॥हिरण्यगर्भोभूगर्भोमाध
वोमधुसूदनः॥२१॥ईश्वरोविक्रमीध
न्वीमेधावीविक्रमःक्रमः॥अनुत्तमो
दुराधर्षःकृतज्ञःकृतिरात्मवान्॥२२॥
सुरेशःशरणंशर्मविश्वरेताःप्रजाभ
वः॥अहःसंवत्सरोव्यालःप्रत्ययःसर्व

लेकेशवालये ॥ द्विकालमेककालेवा
कुर्वन्सर्वंव्यपोहति: ॥ ५७ ॥ दृष्टतोरिशुवः
स्तस्यसोपानाः सर्वेसदायहाः ॥ विलीयंते
चपापानितत्क्षणेयस्मिन्नकीर्तिते ॥ ५८ ॥
येनयात्रंकृतंयेनदेनायपठितंस्तवः
दत्तानिसर्वदानानिविप्रेभ्यःसर्वेसमर्चिता

स॰
३५

इहलोकेपरेवापिनभयंविद्यतेक्वचित्
नाम्नांसहस्रंयोधीतेद्वादश्यांममसंनि
धौ॥९॥सनिर्दहतिपापानिकल्पकोटि
शतानिच॥अश्वत्थसंनिधौपार्थध्यात्वामा
नसिकेशवं॥१०॥पठेन्नामसहस्रंतुग
वांकोटिफलंलभेत्॥शिवालयेपठेन्नि

द्दर्शनः ॥ २८ ॥ अजः सर्वेश्वरः सिद्धः सिद्धिः स
र्वादिरच्युतः ॥ वृषाकपिरमेयात्मा सर्व
योगविनिःसृतः ॥ २९ ॥ वसुर्वसुमनः सत्यः
समात्मा समितः समः ॥ अमोघः पुंडरीका
क्षो वृषकर्मा वृषाकृतिः ॥ ३० ॥ रुद्रो बहुशिरा
रः बभ्रुर्विश्वयोनिः शुचिः श्रवः ॥ अमृतः

स॰
१॰

शाश्वतःस्थाणुर्वरारोहोमहातपः॥३९॥
सर्वगःसर्वविद्भानुर्विष्वक्सेनोजनार्दन॥
वेदोवेदविदव्यंगोवेदांगोवेदवित्कविः
लोकाध्यक्षःसुराध्यक्षोधर्माध्यक्षःकृ
ताकृतिः॥चतुरात्माचतुर्व्यूहश्चतुर्दंष्ट्र
श्चतुर्भुजः॥भ्राजिष्णुर्भोजनंभोक्तासहि

३२

ष्णुर्जगदादिजः॥अनघोविजयोजेतावि
श्वयोनिःपुनर्वसुः॥३४॥उपेन्द्रोवामनः
प्रांशुरमोघःशुचिरूर्जितः॥अतीन्द्रःसंग्र
हःसर्गोधृतात्मानियमोयमः॥३५॥वे
द्योवैद्यःसदायोगीवीरहामाधवोमधुः
अतीन्द्रियोमहामायोमहोत्साहोमहा-

म.
११

बलः ॥ ३४ ॥ महाबुद्धिर्महावीर्यो महाशक्ति
र्महाद्युतिः ॥ अनिर्देश्यवपुः श्रीमानमे
यात्मा महाद्रिधृक् ॥ ३५ ॥ महीषासो मही
भर्ता श्रीनिवासः सतांगतिः ॥ अनिरुद्धः
सुरानंदो गोविंदो गोविदांपतिः ॥ ३६ ॥
मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः

हिरण्यनाभः सुतपाः पद्मनाभः प्रजाप
तिः ॥ २१ ॥ अमृत्युः सर्वदृक् सिंहः संधा
ता संधिमान् स्थिरः ॥ अजो दुर्मर्षणः शा
स्ता विश्रुतात्मा सुरारिहा ॥ २२ ॥ गुरुर्गु
रुतमो धाम सत्यः सत्यपराक्रमः ॥ निमि
षोनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥

स॰
१२

अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समी-
रणः ॥ सहस्रमूर्धा विश्वात्मा सहस्राक्षः
सहस्रपात् ॥ ६४ ॥ आवर्तनो निवृत्तात्मा सं-
वृतः संप्रमर्दनः ॥ अहः संवर्तको वह्निरनि-
लो धरणीधरः ॥ ६५ ॥ सुप्रसादः प्रसन्ना-
त्मा विश्वधृग्विश्वभुग्विभुः ॥ सत्कर्ता स

स्तुतिः साधुजेक्रनो नायो गोनरः ॥४४॥
श्रमत्येया प्रमेयात्मा विशिष्टः शिष्ट-
कृच्छुचिः ॥ सिद्धार्थः सिद्धसंकल्पः सि-
द्धिदः सिद्धिसाधनः ॥४५॥ वृषाही वृष-
भो विष्णुर्वृषपर्वा वृषोदरः ॥ वर्धनो वर्ध-
मानश्च विविक्तः श्रुतिसागरः ॥४६॥ सु

स॰
९३

भुजोदुर्धरोवाग्मीमहेंद्रोवसुदोवसुः॥
नैकरूपोबृहद्रूपःशिपिविष्टःप्रकाश
नः॥४७॥ओजस्तेजोद्युतिधरःप्रकाशा
त्माप्रतापनः॥ऋद्धःस्पष्टाक्षरोमंत्रश्चंद्रां
शुर्भास्करद्युतिः॥४८॥अमृतांशूद्भवो
भानुःशशबिंदुःसुरेश्वरः॥औषधंजगत

तः सेतुः सत्यधर्मपराक्रमः ॥ ४९ ॥ भूत

भव्यभवन्नाथः पवनः पावनोनलः ॥ का

महा कामकृत्कांतः कामी कामप्रदः प्र

भुः ॥ ५० ॥ युगादिकृद्युगावर्तो नैकमाया

महाशनः ॥ अदृश्यो व्यक्तरूपश्च सहस्र

जिदनंतजित ॥ ५१ ॥ इष्टोविशिष्टः शिष्टे

स: २४

ष्टुः शिपिविष्टीनहुषोवृषः ॥ क्रोधहाक्रोध
कृत्कर्ताविश्वबाहुर्महीधरः ॥५२॥ अच्यु
तः प्रथितः प्राणः प्राणदोवासवानुजः
अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठित
स्कंदः स्कंदधरोधुर्योवरदोवायुवाहनः
वासुदेवोबृहद्भानुरादिदेवः पुरंदरः ॥५

:५३
४

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्व
रः ॥ अनुकूलः शतावर्त्तः पद्मी पद्मनि
भेक्षणः ॥ ५५ ॥ पद्मनाभोरविंदाक्षः पद्म
गर्भः शरीरभृत् ॥ महर्द्धिरृद्धो वृद्धात्मा
महाक्षो गरुडध्वजः ॥ ५६ ॥ अतुलः शर।
भो भीमः समयज्ञो हविर्हरिः । सर्वलक्ष

स॰
२५

णलक्षणयोलक्ष्मीवान्समितिंजयः॥५
विक्षरोरोहितोमार्गोहेतुर्दामोदरःस
हः॥ महीधरोमहाभागोवेगवानमि
ताशनः॥५५॥ उद्भवःक्षोभणोदेवःश्री
गर्भःपरमेश्वरः॥ करणकारणकर्ता
विकर्तागहनोगुहः॥५६॥ व्यवसायो

व्यवस्थानः संस्थानः स्थानदो ध्रुवः ॥ पर
र्द्धिः परमस्पष्टः स्तुष्टः पुष्टः शुभेक्षण
रामो विरामो विरजो मार्गो नेयो नया
नयः ॥ वीरः शक्तिमतां श्रेष्ठो धर्मो धर्म
विदुत्तमः ॥ ४३ ॥ वैकुंठः पुरुषः प्राणः प्रा
णदः प्रणवः पृथुः ॥ हिरण्यगर्भः श

न :६:

स॰
९६

घ्नो व्याप्तो वायुरधोक्षजः ॥ ६२ ॥ ऋतुः
सुदर्शनः कालः परमेष्ठी परिग्रहः ॥
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षि
णः ॥ ६३ ॥ विस्तारः स्थावरः स्थाणुः प्रमा
णं बीजमव्ययं ॥ अर्थोनर्थो महाको
शो महाभोगो महाधनः ॥ ६४ ॥ अनिर्वि

सः स्थविष्ठोभूर्धर्मयूपोमहामखः ॥ न-
क्षत्रनेमिः नक्षत्रीक्षमः क्षामः समीहन
यज्ञइज्योमहेज्यश्चक्रतुः सत्रंसतांगति
सर्वदर्शीविमुक्तात्मासर्वज्ञोज्ञानमुत्त
मं ॥ ९९ ॥ सुव्रतः सुमुखः सूक्ष्मः सुघोषः
सुखदः सुहृत् ॥ मनोहरोजितक्रोधोवी-

स.
१७

वीरबाहुर्विदारणः॥ स्वापनः स्ववशो
व्यापी नैकात्मा नैककर्मकृत्॥ वत्सरो
वत्सलो वत्सी रत्नगर्भो धनेश्वरः॥ ६८॥
धर्मगुप्धर्मकृद्धर्मी सदसत्क्षरमक्षरं॥
अविज्ञाता सहस्रांशुर्विधाता कृतलक्ष
णः॥ ६९॥ गभस्तिनेमिः सत्वस्थः सिंहो

भूतमहेश्वरः ॥ प्रादिदेवो महादेवो देवे-
शो देवभृद्गुरुः ॥ ७ ॥ उत्तरो गोपतिर्गो-
प्ता ज्ञानगम्यः पुरातनः ॥ शरीरी भूतभृ-
द्भोक्ता कपींद्रो भूरिदक्षिणः ॥ ७४ ॥ सोम-
पामृतपः सोमः शुक्रजिष्णुरुत्तमः ॥
विनेयो जयः सत्यसंधो दाशार्हः सात्व-

स॰
२८

लोपतिः ॥ ९२ ॥ जीवो विनयिता साक्षी मु
कुंदोमितविक्रमः ॥ अंभोनिधिरनंता
त्मा महोदधिशयोंतकः ॥ अजो महार्हः
स्वाभाव्यो जितामित्रः प्रमोदनः ॥ आ
नंदो नंदनो नंदः सत्यधर्मा त्रिविक्रमः
महर्षिः कपिलाचार्यः कृतज्ञो मेदिनी

पतिः॥त्रिपदस्त्रिदशाध्यक्षोमहाशृंगः
कृतांतकृत॥७५॥महावराहोगोविंदः
सुषेणःकनकांगदी॥गुह्योगभीरोग
हनोगुप्तश्चक्रगदाधरः॥७६॥वेधाःस्वा
गोजितःकृष्णोदृढःसंकर्षणोच्युतः॥
वरुणोवारुणोवृक्षःपुष्कराक्षोमहा

स. ९९

मनः ॥७७॥ भगवान्भगहानंदी वनमालीह
लायुधः ॥ आदित्यो ज्योतिरादित्यः सहि
ष्णुर्गतिसत्तमः ॥७८॥ सुधन्वा खंडपरशु
र्दारुणो द्रविणप्रदः ॥ दिवस्पृक्सर्वदृ
ग्व्यासो वाचस्पतिरयोनिजः ॥ त्रिसामा सा
मगः साम निर्वाणं भेषजं भिषक् ॥ सं

न्यासकृच्छमः शांतो निष्ठा शांतिः परा
यणः ॥ ६१ ॥ शुभांगः शांतिदः स्रष्टा कुमु
दः कुवलेशयः ॥ गोहितो गोपतिर्गोप्ता
वृषभाक्षो वृषप्रियः ॥ ६२ ॥ अनिवर्ती नि
वृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ॥ श्रीवत्स
वक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः

स॰ ५॰

श्रीदःश्रीशःश्रीनिवासःश्रीनिधिःश्री
विभावनः॥श्रीधरःश्रीकरःश्रेयःश्री
मांल्लोकत्रयःश्रयः॥दक्षू॥स्ववत्नःस्वंगःश
तानंदोनंदिर्ज्योतिर्गणेश्वरः॥विजिता
त्माविधेयात्मासत्कीर्तिःछिन्नसंशयः
उदीर्णःसर्वतश्चक्षुरनीशःशाश्वतःस्थि

८४

रः॥ भूशयो भूषणो भूतिर्विशोकः शोक
नाशनः॥८५॥ अर्चिष्मानर्चितः कुम्भो
विशुद्धात्मा विशोधनः॥ अनिरुद्धोप्रति
रथः प्रद्युम्नोमितविक्रमः॥८६॥ कालने
मिनिहा वीरः शूरः शौरिजनेश्वरः॥ त्रिलो
कात्मा त्रिलोकेशः केशवः केशिहा हरिः

स॰
३२

रिः॥८७॥कामदेवःकामपालःकामीकां
तःकृतागमः॥अनिर्देश्यवपुर्विष्णुर्वीरोऽ
नंतोधनंजयः॥८८॥ब्रह्मण्योब्रह्मकृद्ब्रा
ह्मब्रह्मविवर्द्धनः॥ब्रह्मविद्ब्राह्मणोब्र
ह्मीब्रह्मज्ञोब्राह्मणप्रियः॥८९॥महाक्र
मोमहाकर्मामहातेजामहोरगः॥महा

क्रतुर्महायज्वा महायज्ञो महाहविः ॥
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता र-
णप्रियः ॥ पूर्णः पूरयिता पुण्यः पुण्य-
कीर्तिरनामयः ॥ ९१ ॥ मनोजवस्तीर्थक-
रो वसुरेता वसुप्रदः ॥ वसुप्रदो वासुदे-
वो वसुर्वसुमना हविः ॥ ९२ ॥ सद्गतिः स-

स॰
२२

त्कृतिःसत्तःसद्भूतिःसत्परायणः॥शूर
सेनोयदुःश्रेष्ठःसन्निवासःसुयामुनः॥९
भूतावासोवासुदेवःसर्वासुनिलयोनल
दर्पहादर्पदोदृप्तोदुर्धरोथापराजितः॥
विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्ति
मान्॥अनेकमूर्तिरव्यक्तःशतमूर्तिःश

३
॥
९४

तानन: ॥ २५ ॥ एकोनेकः सवः कः किंय
त्पदमनुत्तमं ॥ लोकबंधुर्लोकनाथो
माधवो भक्तवत्सलः ॥ २६ ॥ सुवर्णवर्णो
हेमांगो वरांगश्चंदनांगदी ॥ वीरहा विष
मः शून्यो घृताशीरचलश्चलः ॥ २७ ॥ अमा
नी मानदो मान्यो लोकस्वामी त्रिलोकधृ

से. ११

कृ॥ सुमेधामेधजोधन्यः सत्यमेधाधरा
धरः॥ ७८॥ तेजोवृषोद्युतिधरः सर्वशस्त्र
भृतांवरः॥ प्रग्रहोनिग्रहोव्यग्रोनैकशृं
गोगदाग्रजः॥ ७९॥ चतुर्मूर्तिश्चतुर्बाहु
श्चतुर्व्यूहश्चतुर्गतिः॥ चतुरात्माचतु
र्भावश्चतुर्वेदविदेकपात्॥ ८०॥ समाव

र्तोऽनिवृत्तात्मा दुर्जयो दुरतिक्रमः ॥ दुर्ल-
भो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ १ ॥
शुभांगो लोकसारंगः सुतंतुस्तंतुवर्ध-
नः ॥ इंद्रकर्मा महाकर्मा कृतकर्मा कृ-
तागमः ॥ २ ॥ उद्भवः सुंदरः सुंदो रत्ननाभ-
सुलोचनः ॥ अर्को वाजसनः शृंगी जय-

तः सर्वविज्जयी ॥ ७ ॥ सुवर्णबिंदुरक्षोभ्यः स
र्ववागीश्वरेश्वरः ॥ महाह्रदो महागर्तो म
हाभूतो महानिधिः ॥ ८ ॥ कुमुदः कुंदरः कुं
दः पर्जन्यः पावनोऽनिलः ॥ अमृतांशोऽमृ
तवपुः सर्वज्ञः सर्वतोमुखः ॥ ९ ॥ सुलभः
सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ॥ न्यग्रो

२५

ः प्रथ ... का

ग्रोधोदुंबरोऽश्वत्थश्चाणूरान्ध्रनिसूदन

सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाह

नः ॥ अमूर्तिरनघोऽचिन्त्यो भयकृद्भयना

शनः ॥ ७ ॥ अणुर्बृहत्कृशः स्थूलो गुणभृ

न्निर्गुणो महान् ॥ अधृतः स्वधृतः स्वास्यः

प्राग्वंशो वंशवर्धनः ॥ ८ ॥ भारभृत्कथि

सं·
२५

नोयोगीयोगीशःसर्वकामदः॥ आश्र·
मःश्रमणःक्षामःसुपर्णोवायुवाहनः
धनुर्धरोधनुर्वेदोदंडोदमयितादमः॥ अ
पराजितःसर्वसहोनियंतानियमोय
मः॥ ८१॥ सत्ववान्सात्विकःसत्यःसत्यधर्म
परायणः॥ अभिप्रायःप्रियार्होर्हःप्रि·

४

यक्षमीतिवर्यनः॥११॥विहायमगुणि
मोतिसुरविकृतशुरिवशः॥ रविविरो
चनः सूर्यः सविता रविलोचनः॥१२॥
सर्वतोकृतसगाभोक्ता सर्वदोनेकदोश
जः॥ श्रुतिर्विसः सदा सर्षी लोकाधिष्ठ
नमद्भुतः॥१३॥सनातनमनातननतमः कं

पी॰
से॰
३६

पिलः कांपिंग्यः ॥ खलिंदः खलिकु
ल्यलिखलिभुक्खलिंदविणः ॥ ४४ ॥
थोरोद्धः कुंडलीचक्रीविक्रमस्त्रिजितश्रा
मनः ॥ शाह्यातिगः शाख्मरुद्धः शिपिविः श्रा
वेरीकरः ॥ ४५ ॥ श्रुकरः पेशलोद्दढोद
हिणः स्वमिणांवरः ॥ विद्वत्तमोवीतभ

...ः श्र...

यः पुण्यश्रवणकीर्तनः ॥ २६ ॥ उत्तारणो
दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ॥ वीरहा
रक्षणः शांतो जीवनः पर्यवस्थितः ॥ २७ ॥
अनंतरूपोनंतश्रीजितमन्युभयापहः ॥
चतुरश्रो गभीरात्मा विदिशो व्यादिशो
दिशः ॥ २८ ॥ अनादिर्भूर्भुवो लक्ष्मीः सुवी

रुचिरांगदः॥ जननो जनजन्मादिर्भी
मो भीमपराक्रमः॥ ९१॥ आधारनिलयो
धाता पुष्पहासः प्रजागरः॥ ऊर्ध्वगः स
त्पथाचारः प्राणदः प्रणवः पणः॥ ९२॥
प्रमाणं प्राणनिलयः प्राणभृत्प्राण
जीवनः॥ तत्त्वं तत्त्वविदेकात्मा जन्ममृ

...नः प्रथ... स्व...

सुजेतानिगाः ॥ २१ ॥ भूर्भुवःस्वस्तरुस्तार

सविताप्रपितामहः ॥ यज्ञोयज्ञपतिर्य

ज्वायज्ञांगोयज्ञवाहनः ॥ २२ ॥ यज्ञभृद्य

ज्ञकृद्यज्ञीयज्ञभुग्यज्ञसाधनः ॥ यज्ञांत

कृद्यज्ञगुह्यमन्नमन्नादएवच ॥ २३ ॥ आत्म

योनिःस्वयंजातोवैखानःसामगाय

स॰
सं॰
२८

नैः॥ देवकीनंदनःस्रष्टाक्षितीशःपाप
नाशनः॥२४॥ शांखभृन्नंदकीचक्रीशा
र्ङ्गधन्वागदाधरः॥ रथांगपाणिरक्षोभ्यः
सर्वप्रहरणायुधः॥२५॥ ॐनमोनमः॥१॥
इतीदेवकीतनीयस्यकेशवस्यमहात्म
नः॥ नाम्नांसहस्रंदिव्यानामशेषेणप्र

सर्वागमानामाचारः प्रथमं परिकल्प
ते॥ आचारः प्रभवो धर्मो धर्मस्य प्रभुरच्यु
तः॥ ध२॥ ऋषयः पितरो देवा महाभूता
नि धातवः॥ जंगमाजंगमं चेदं जगन्नारा
यणोद्भवं॥ ध३॥ योगो ज्ञानं तथा सांख्यं
विद्याः शिल्पादिकर्म च॥ वेदाः शास्त्राणि

स्त्र.
३२

विज्ञानमेतत्सर्वंजनार्द्दनात्॥४४॥एको
विष्णुर्महद्भूतंपृथग्भूतान्यनेकशः॥त्रीं
ल्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगा
व्ययः॥४५॥इमंस्तवंभगवतोविष्णोर्व्यासे
नकीर्तितं॥पठेद्यइच्छेत्पुरुषःश्रेयःप्रा
प्तुंसुखानिच॥४६॥विश्वेश्वरमजंदेवंज-

गतः श्रद्धयाप्ययं ॥ भजंति ये पुष्कराक्षं न
ते यांति पराभवं ॥ ४१ ॥ अर्जुनउवाच ॥ पद्म
पत्रविशालाक्ष पद्मनाभ सुरोत्तम ॥ भ
क्तानामनुरक्तानां त्राता भव जनार्दन ॥
श्रीभगवानुवाच ॥ यो मां नामसहस्रेण
स्तोतुमिच्छति पांडव ॥ सोहमेकेन श्लो

४५

स स.
२२

केनस्तैर्ध्रुवनमोस्तुयः ॥४९॥ नमोस्त्व
नंताय सहस्रमूर्तये सहस्रपादाक्षिशि
रोरुबाहवे ॥ सहस्रनाम्ने पुरुषाय शा
श्वते सहस्रकोटीयुगधारिणे नमः ॥५
नमः कमलनाभाय नमस्ते जलशायि
ने ॥ नमस्ते केशवानंत वासुदेव नमोस्तु

ते॥५१॥वासनाद्वासुदेवस्यवासितंभुव
नत्रयं॥सर्वभूतनिवासोसिवासुदेवन
मोस्तुते॥५२॥नमोब्रह्मण्यदेवायगो
ब्राह्मणहितायच॥जगद्धितायकृष्णा
यगोविंदायनमोनमः॥५३॥आकाशा
त्पतितंतोयंयथागच्छतिसागरं॥सर्व

वि. ३ स. ३५

देवनमस्कारं केशवं प्रतिगच्छति ॥ ५४ ॥
एवमेतानिः कंटकः पंथायच्चमे प्रज्ज्वलते हविः
रूपं पश्यते विजानीयान्तो विंदरहितागा
मे ॥ ५५ ॥ सर्वदेवेषु यत्पुण्यं सर्वतीर्थेषु य
त्फले ॥ तत्फलं समवाप्नोति स्तुत्वा देवं
जनार्दनं ॥ ५६ ॥ यो नरः पठते नित्यं त्रिका

येतुलसीवनसंस्थितः ॥ ६२ ॥ नरोगसंक्षि
मवाप्नोति चक्रपाणिप्रियो यथा ॥ ब्रह्म
हत्यादिकं पापं सर्वं पापं विनश्यति ॥ ६३ ॥
विलीयंते च पापानि चान्यपापस्य का
कथा ॥ सर्वपापविनिर्मुक्तो विष्णुलोकं
च गच्छति ॥ ६४ ॥ इति श्रीमहाभारते शांत

म.
३६

महस्र्यांसंहितायांवैय्यासक्यांशांतिपर्वणि
उत्तमानुशासनेदानधर्मेषुविष्णोर्नामस
हस्रंसंपूर्णंसमाप्तः॥ शुभमस्तुसर्वजग
तः॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥